

# FIVE JEWELS

# रत्नपञ्चकम्

( श्रीरामकृष्णजयन्ती )

१९५५



—कल्याणसेवकः ।

प्रकाशक :
महाराजजीका परमभक्त
**चन्दा-कान्तय्या**
वरंगल ( Warangal ) N. S. R.

लेखक :

**स्वानन्दसम्राट् श्रीमत्-**
**कल्याणसेवकमहाराज**

मुद्रक :
**श्री. ज. गानू,**
राजगुरु प्रेस,
४०५ नारायण पेठ, पुणें २.

॥ ॐ ॥

## स्वानन्दसम्राट् श्रीमत् कल्याणसेवकमहाराज

Lord of myself though not of lands,
Having nothing I have all.



मी माझा निजसम्राट् नश्वरभूचा कदापि हा नोहे ॥
किमपि न माझ्याजवळी पदार्थमात्रचि सगळा मम आहे ॥ १ ॥

9-1-1955, Warangal.

**सम्राडहं स्वात्मनो वै क्षित्यादेर्नश्वरस्य न ॥**
**नास्ति मन्निकटे किञ्चिद्वस्तुजातं ममैव हि ॥**
–३९६–स्वानन्दसाम्राज्यम् ।

— **चन्दाकान्तय्या**, वरंगल.



स्वानन्दसाम्राज्यं, स्तोत्रनक्षत्रमाला, नवरत्नहारः, स्वात्माराम-
सहस्रनामावलिः, गीतामालाऽऽदिग्रन्थकर्तृ —
श्रीसमर्थरामदास - कल्याणपदान्वित —
स्वानन्दसम्राट् श्रीमत्—

कल्याणसेवकमहाराजप्रणीतम् ।

# रत्नपञ्चकम् ।

## FIVE JEWELS

*

( श्रीरामकृष्ण जयन्ती )
१९५५

*

मूल्यं मननम् ।

गीतामाला ।

— १ —

( यमन कल्याण - दादरा )

परमविमलसुखखनिदं, रामकृष्णपदकमलम् ॥ ध्रु० ॥
गर्भजन्ममृत्युसर्वतापपापहारकम् ॥ १ ॥
कामक्रोधलोभशोकद्वैतभ्रान्तिनाशकम् ॥ २ ॥
ब्रह्मसेवकाय पूर्णकल्याणदायकम् ॥ ३ ॥

— २ —

( कालिंगडा-दादरा )

रामचन्द्रपदकमलं भज सततं विमलहृदा ॥ ध्रु० ॥
जगदखिलं मायिकं हि त्यक्त्वा तन्मोहमेव ।
सेव्यते च कल्याणं शिवमुनिभिर्विमलैर्यत् ॥ १ ॥

— ३ —

( रागो धानी, तालो दादरा )

रामनाम स्मर ( जप, वद ) सदैव । कल्याणं सेवकस्य ॥ ध्रु० ॥
सिद्धानां मुकुटमणिर्धूर्जटिर्हि जपति सदा ।
रामायणकाव्यकर्ताऽभूद् विलोमनाम्ना ॥ १ ॥

— ४ —

( भीमपलास - त्रिताल )

कोई नहीं अपना, जगतमें ॥ ध्रु० ॥
मात पिता सुत वनिता भाई । सब है मतलबका, जगतमें ॥ १ ॥
रामप्रभुबिन कोई न अपना । सब जन स्वारथका, जगतमें ॥ २ ॥
कल्याणसेवक कहत बुधाप्रति । रामप्रभु अपनाना, जगतमें ॥ ३ ॥

* * *

॥ ॐ ॥

# अत्यल्पचरितम् ।

## स्वानन्दसम्राट्

## श्रीमत् कल्याणसेवकमहात्मनाम् ।

श्रीमत्समर्थ-कल्याणसेवकस्य महात्मनः ॥
चरित्राय वयं नालं तथापीषदिहोच्यते ॥ १

कटगुणस्य महत्त्वमिहोदितुं
किमु सहस्रमुखोऽपि स शक्नुयात् ॥
जनिमवाप्य स यत्र महामनाः
पदयुगेन महीं सममण्डयत् ॥ २ ॥

कृष्णानदीपश्चिमतीरसंस्थ–
सोतारपूर्नूतनपाठशालाम् ॥
जगत्प्रसिद्धामिव संविधातुं
विवेश तस्यां नु महाशयोऽयम् ॥ ३ ॥

अधीतवान्पुँस्तकसप्तकं त–
दाङ्ग्लस्य तीर्णः प्रथमप्रकोष्ठ्याम् ॥
अत्रान्तरे सद्गुरुरामदास–
चरित्रपाठात्समभूद्विरक्तिः ॥ ४ ॥

अथ चोत्तरशिक्षणाय त–
त्स्वभिधासार्थकपुँण्यपत्तने ॥
स ददर्श च रामकृष्णस–
च्चरितं सुष्ठु कँलागृहे गतः ॥ ५ ॥

1 New School, Satara. 2 Matric. 3 Poona. 4 Arts College.

अत्रान्तरे पळनिटकराभिदस्य भगवद्भक्ताग्रेसरस्य परिचयबलेन द्विगुणीकृतविरक्तिः सक्तो भगवद्भक्त्यां निराकृतपितृचरणनिश्चितनिजविवाहः स्वेच्छया प्रवेशयित्वाऽऽत्मानं सज्जनगिरौ तदनु च दिनत्रयाराधनेन तोषितात्प्रसादितस्वप्ननिजदर्शनात्तत्रभवतः श्रीसमर्थरामदासस्वामिनो लब्धवचनो जगाम डोमग्रामम् ॥ ६ ॥

तत्राप्येष शरत्त्रयावधि नदीवातैः पवित्रीकृते
श्रीकल्याणमहात्मनां शुभतमे सोऽसौ मठे चावसत् ॥
गायत्रीजपमाचरन्नपि ततो भैक्ष्याय गच्छन्नथो
ग्रामेऽथापि पठंश्च पुस्तकवरं श्रीदासबोधाभिधम् ॥ ७ ॥

इत्थं संवत्सरत्रितयेन चतुःशतकृत्वःकृतश्रीमद्ग्रन्थराज-दासबोधपारायणोऽयमनुसृतस्तदनु नैजामीयचौरैस्तदधिकारिभिश्च मत्वाऽयं क्रान्तिकारक इति परिशोधितश्च पौनःपुन्येन निश्चितः कल्याणसेवक इत्याहूतस्तन्नाम्ना प्रथितोऽभवल्लोकेऽपि तन्नाम्नैव ॥ ८ ॥

तदनु गच्छत्स्वेवं कतिपयदिवसेषु सर्वप्रियङ्करः शङ्करः श्रुत्वा कस्माच्चिड्डोमग्रामस्थयात्रिकात्कमपि महापुरुषं निश्चित्य च तमेनं स्वीयमृणत्रयदूरीकृतिप्रधानं निमित्तमैच्छद्द्रन्तुं डोमग्रामं पण्ढरपुरात् ॥ ९ ॥

अथ च तत्रभवतो निजप्रियनन्दनदर्शनसञ्जातानन्दाश्रुपूरपूर्णनेत्रयुगुलेन भणता पौनःपुन्येन ‘ देवँगिळे ’ इति निजपित्राऽश्रुभिरभिषिक्तो मूर्धनि नीतो बोरखळाभिधं कृष्णातीरस्थं मातुलग्राममेकदिवसानन्तरं निजजननीदर्शनात्पूर्णोऽयमाजगाम डोमग्रामं कल्याणसेवकः ॥ १० ॥

अथ चैकस्मिन्दिवसे ‘ न ह्यात्मज्ञानं ब्रह्मज्ञानं विना गच्छ शृङ्गेरीं तत्कृत ’ इत्यभिबोधितः कल्याणस्वामिभिरगच्छच्छृङ्गेरीं, पळनिटकरस्यानुमत्या मिलितस्य मध्येमार्गम् । तत्र च न विद्या गुरुसाम्प्रदायं विनेति लोकस्य कथयान्निवाधिगतसकलविज्ञानोऽपि स्वयं जगद्गुरुर्गोविन्दयतिशेखराणामिव सविधे परमहंसपरिव्राजकाचार्यजगद्गुरुचन्द्रशेखरभारतीचरणानां पुनःस्मरन्निवाधीतवान् काव्यपञ्चकादिप्रस्थानत्रयीभाष्यान्तं वत्सरद्वयेन ॥ ११ ॥

५ बाल्ये पितृचरणपूजासमये बालभावसुखनिक्षिप्तशालिग्रामोदरप्रवेशाद् ‘ देवगिळे ’ इति महाराष्ट्रभाषया लब्धाभिधोऽस्मदीय कल्याणसेवकमहाशय एव ।



इत्थमतिलघुसमयेनैव करतलामलकीकृतनिखिलविद्यःपथि किञ्चित्कालनिवासेनानुगृहीतसज्जनगिरिरुपरि च वर्षद्वयेन कृतध्यानधारणतपाः प्रत्यागत्य हिममहीभृतः सज्जनगिरिं प्रार्थनया तेषामसाधयत्समर्थसेवामाण्डलिकानामशेषाणि कर्तव्यानि ॥ १२ ॥

एतस्मिन्नन्तरे सादरमाहूतः काँशीकरेण कीर्तनकृते रामकृष्णपरमहंसोत्सवे गत्वा प्रारभत गीतं यथा दत्तं रामकृष्णेनैव साक्षान्निजदर्शनममुष्मै पुण्यश्रवसे ॥ १३ ॥

न वक्तुं शक्यते काशीकरस्य पुण्यं यदयमेकदा गत्वाऽकरोदद्वैतप्रवचनमष्टदिनपर्यन्तम् । एकदा च निमन्त्रितो भोजनाय गत्वा चर्चया योगस्य निनाय कालम् । अथ च गते स्वस्मिन्बहिरेकाग्रमनसा स्थितमेनं प्रत्यागत्य स दृष्ट्वा यथाऽऽगतमगच्छत् । अनन्तरमागत्य स्थितःस्वपदविन्यासस्वनेन निवृत्तस्वव्यापारमपि प्रमोदाश्रुपटलपरिपूर्णविलोचनं चक्षुर्लक्ष्मीचकोरैनमनूनानुभावम् । ततश्च पृष्टः पदे पदे प्रमोदाश्रुनिमित्तं जगाद निजानुभूतं रामकृष्णपरमहंसम् ॥ १४ ॥

उपरि च निराचकार भोजनम् । माघपौर्णिमायां ( 1953 ) सज्जनगिरौ श्रीसमर्थगुहायामन्धतमसेन चण्डकिरणभयादिवाश्रितायां मनुष्यागम्यायां रामगुहाऽह्वान्तरायामुपाविशद्ध्यानाय । अथ च सज्जनगिरिस्थजनाः श्रीसमर्थरामदासभक्ताः श्रीमत्कल्याणसेवकस्य प्रातःप्रभृतिदर्शनालाभान्मार्गयन्तो ददृशुः समर्थगुहास्थश्रीमत्समर्थभक्ताग्रेसरम् । अथ च कृताग्रहेऽप्यनागतेऽस्मिन्मा भूयाज्जनसम्मर्द इति नियोजितेऽपि रक्षकभटजाते कृतेऽपि च निषेधफलकेऽत्वरन्त जना दर्शनार्थममुष्य, न चित्रं मनो गच्छति हि वारितविषयेषु ॥ १५ ॥

अथ च नवकेन दिवसानां निराकृतवारिबिन्दुमात्रेऽमुष्मिन्दोलायमाने चैतज्जीवितसन्देहे जननिकरे स्वप्नप्रतिबोधितेन कोकिलन्यायवादिना मित्रेण

६ L. V. Kashikar, M. A.
Agency Manager.

काशीकराणामागत्य भँजनकीर्तनेन सहानेकैः कृतेनोन्मीलितविलोचनायादीयततीर्थं रामकृष्णपरमहंसानाम् ॥ १६ ॥

तदनु श्रीमत्कल्याणसेवकचरणवचसा यतमान एवानयनाय कोकिलन्यायवादिनि स्वयमेवागतायावदान्निजानुभूतानेकदेवतादर्शनादिकं काशीकरायादाच्चाभयमनुग्रहायामुष्य निजागमनेन श्रीरामकृष्णोत्सवसमये ॥ १७ ॥

तदनु च सत्यवचा एष गत्वा तत्र न्यवसत्पञ्चदशदिवसावधि कुर्वन्मनःप्रमोदं जनानां निजदर्शनेन ॥ १८ ॥

अथ चैकदा स्वेच्छयाऽऽगतस्य प्रतिनिवृत्य महाबलेश्वरात्प्रदोषे समये नीराजनस्य श्रीरामकृष्णानामेतस्य तस्थुषः समाधौ गृहं काशीकरस्याभवद्द्विसहस्राधिकजनप्रपूर्णं विंशतिघटिकापर्यन्तम् ॥ १९ ॥

प्रथमसमाधिदिवसे प्रतिबोधितः ‘ सार्धैकसंवत्सरनिवासपावित्रीकृतधर्मपुरोऽतिथीकुर्वात्मानं ( 27–1–1955 ) काशीकरगृह ’ इति भगवता, तदनुसारमेव वसन्तोत्तरार्धे (23–5–1953 ) समये जयन्त्या नृसिंहस्य निजदर्शनवितरणेनानन्दान्दोलिकारोहणमकारयत्सर्वान्धर्मपुरीस्थसर्वसद्गासुरान् ॥ २० ॥

ततःकतिपयदिवसैरेव विज्ञातनिखिलनिजानुभवो धर्मपुरीधरणीसुरैरयमकरोद्वसतिं सितशीतलवारिपूर्णदीर्घिकायुते सान्द्रपत्राश्वत्थतरुशश्वद्वातसञ्चार आलये ललाटाक्षस्यागच्छत्प्रातिगच्छज्जनकृतेऽविज्ञातार्थद्वारपिधानपदे सामोदम् ॥ २१ ॥

तदनु कुर्वन्प्रातःस्नानाद्यांह्निकं पश्यन्सूत्रभाष्यं भुञ्जानो भिक्षान्नं प्राप्तं पञ्चगृहात्कवयन् गीर्वाणवाण्यां गीतामालां, स्तोत्रनक्षत्रमालां, स्वानन्दसाम्राज्यं च निनाय विजयंचातुर्मास्यम् ॥ २२ ॥

तदनु भ्रमान्भिक्षाकृते कीर्तनपुरःसरं जनैः सह दिने दिने धर्मपुर्यामेव भोजयनृत्विजषष्ठिसङ्ख्याकान्नित्यमुपन्यसन्नित्यं नक्तं चरितं श्रीसमर्थानां व्रजवाण्यामुपन्यासयंश्चान्यान्सम्यग्ज्ञायतां संवैरित्यान्ध्रभारत्यामनयत्समाप्तिं श्रीसमर्थरामदासनवमीमहोत्सवमग्रजाद्यन्त्यजान्तान्नदानेन ॥ २३ ॥

---

७ बोल हरि बोल हरि हरि हरि बोल ।
केशव माधव मुकुन्द हरि बोल ॥



अत्रान्तरे चतुर्थदिवस उपन्यासकीर्तनानन्तरं क्रियमाणे मन्त्रपुष्पे सर्वैरनेकजन्मभिरानन्दोद्रेकेणालगत्समाधिर्यथाऽनेन न ज्ञातो जातः शिरसि घात उत्पततस्तदनन्तरं बालस्येवास्य ॥ २४ ॥

अथ च जये वत्सरेऽदृष्टप्रकाशं यथा निनीषुश्चातुर्मास्यं विवेश कृत्रिमगुहाया कल्पितायां पेद्दहनुमद्गृहेऽविदितवत्यां कथामपि सूर्याचन्द्रमसोः। अथास्मिन्ननुत्थितवति समाधेः सार्धदिवसावध्येकदा दिनद्वयान्तमन्यदा बिभ्यति स्म जननिकरः प्रेम हि पश्यति भयान्यपदेऽपि। ततः स्थातुकामोऽपि चातुर्मास्यान्तं रहासि भिया जनसम्मर्दाद्विभ्रात्समाधेः प्रार्थनया जनानामदान्निजदर्शनं करुणार्द्रातरङ्गो भाद्रपदपौर्णिमायां न चित्रं महान्तो भक्तमनोरथपूरकाः स्वकृतनियमात्ययेऽपि ॥ २५ ॥

अथ च पुनर्निनाय चातुर्मास्यं तद्गुहायामेवालक्षमाणो जनै रचयंश्च रत्नपञ्चकं, नवरत्नहारं, स्वात्मारामसहस्रनामावलिं, नानागेयानि च सुरसरस्वत्याम् ॥ २६ ॥

इत्थं समाधिदर्शनेन द्विगुणीकृतभक्तिभावैरुपास्यमानो भूदेवैरध्यास्ते धर्मपुरीमद्यापि ॥ २७ ॥

श्रीदत्तजयन्त्यां }
जयनामसंवत्सरे। }

T. शिवरामशास्त्री,
धर्मपुरी, ९–१२–५४.

[ काशीकरमहाराष्ट्रीय ( २–३–५४ ) पत्राधारेण लिखितमेतदत्यल्पचरितं स्वानन्दसम्राट् श्रीमत् कल्याणसेवकमहात्मनाम् । ]

॥ ॐ तत्सत् ॥

॥ ॐ ॥

## कृपादृशा परिपश्यन्तु ।

वन्देऽभीक्ष्णमहं समस्तजगदानन्दैकहेतुं मुदा
श्रीमद्धर्मपुरे प्रकाशितनिजस्वानन्दसम्राट्पदम् ॥
भस्मच्छन्नमिवाग्निहोत्रमखिलैः सन्दृश्यमानं जनै-
र्ब्रह्मैवेति मुमुक्षुभिस्तु सुधियं कल्याणसत्सेवकम् ॥ १ ॥
ब्रह्मन् ! कुत्र गतोऽसि, भूतलमहं, किं तत्र कार्यं महत् !
द्रष्टुं योगिसुदुर्लभं निरुपमं कल्याणसत्सेवकम् ॥
कोऽसौ, श्रीहरिरेव सर्वजगदानन्दैकहेतुर्महान्,
श्रुत्वा विस्मयमापुरेवमखिला इन्द्रादिवृन्दारकाः ॥ २ ॥
विष्णुयागविधिदीक्षितस्य त-
द्भक्तिभावपरिशीलनाय किम् ॥
अत्र तिष्ठति गृहे हनूमतो
योगिरूपधर एत्य माधवः ॥ ३ ॥
(युग्मम् ।) संसाधितो यैर्नृहरेः कटाक्षो
यथा महेन्द्रेण शिवेण धात्रा ॥
स्थित्वा गुहायां परिकल्पितायां
हनूमता धर्मपुरे स्वगेहे ॥ ४ ॥
तैः साधितः शापविमोक्षणाय
एतैस्तु निष्कामनया च भक्त्या ॥
तानप्रमेयान्पुरुषान्प्रपद्ये
सन्त्यक्तसर्वेन्द्रियवासनाँश्च ॥ ५ ॥



धर्मपुर्यान्स्थितान्सर्वाञ्जनानार्द्रकृपादृशा ॥
सर्वदा परिपश्यन्तु श्रीमत्कल्याणसेवकाः ॥ ६ ॥
नैव दृष्टा न श्रुताश्च ह्येतत्तुल्या मया भुवि ॥
पुनर्दर्शनकामेन लिखितं श्लोकसप्तकम् ॥ ७ ॥

— भवदनुग्रहाभिलाषी

जी. रघुरामशास्त्री



धर्मपुरनिवासी गुण्डीत्युपाभिधः ।

जयपौषशु० ७ ॥

१।१।५५

---

— १ —

### तिलककामोद-दादरा

दशरथसुत ! रामचन्द्र ! ॥ विमलसुखद ! मे प्रसीद ॥ ध्रु० ॥
सनकाद्यैर्मुनिगणैर्ध्येयमान ! परमगुरो ! ॥
सकलपतितपावन ! राम ॥ सहजसदय ! कल्याणद ! ॥ १ ॥

— २ —

### धानी-दादरा

वद बुध ! रघुरामनाम ॥ निजभक्त्याऽखिलसुखदम् ॥ ध्रु० ॥
सर्वेषामधिकारः स्त्रीशूद्रादिकनॄणाम् ॥
शिवसेवकमुनिभिर्यद् भजते भुक्तिमुक्तिदम् ॥ १ ॥

---

॥ ॐ ॥

॥ श्रीरामसमर्थ ॥

श्रीसमर्थरामदास-कल्याणपदान्वितस्वानन्दसम्राट्-

श्रीमत्कल्याणसेवकमहाराजप्रणीतम् ।

# रत्नपञ्चकम् ।

## FIVE JEWELS.

### प्रथमं रत्नम् ।

### १ गणेशस्तोत्रम् ।

नत्वा यन्मुनय इहैव यान्ति सर्वे
निर्विघ्नं प्रथमत एव तन्नमामि ॥
ब्रह्माद्यं सकलजगद् गणेशरूपं
श्रीरामं विमलमनन्तमेकवस्तु ॥ १ ॥

प्रत्यक्षं त्वमसि गणेश ! सर्वरूपो
ब्रह्म त्वं सकलमिदं सनामरूपम् ॥
कर्ता त्वं निखिलचराचरस्य धर्ता
हर्ता त्वं त्रिशिवविरञ्चिविष्णुरूपः ॥ २ ॥

श्रोतारं निजमव मां सदैव शिष्यं
वक्तारं ह्यवसि न काऽपि मेऽत्र शंका ॥
सर्वास्त्वं सुरनरसाधकान्पितेव
दिग्भागात्सकलत एव पाहि नित्यम् ॥ ३ ॥





सच्चित्त्वं सुखघनवाङ्मयोऽद्वितीयो
विज्ञानं परतरवस्तु देव ! साक्षात् ॥
ज्ञानं त्वं सकलमयो जगत्स्वरूपः
प्रत्यक्षं शुभतममूर्तिरेव पूर्णः ॥ ४ ॥

मीमांसा द्विविधा हि गौतममतं वैशेषिकं यौगिकं
साङ्ख्यं व्याकरणं निरुक्तमखिलं छन्दोऽथ शिक्षादिषट् ॥
कल्पो ज्यौतिषनीतिधर्मविविधा विद्याः कलाः कीर्तनं
ह्यायुःकार्मुकवास्तुवेदविषयाः शाखा गणेशः स्वयम् ॥ ५ ॥

ब्रह्मा विष्णुश्च रुद्रः सुरपतिरनलो भूर्मुखाः सप्तलोकाः
सूर्यस्त्वं चन्द्रमास्त्वं यमवरुणसुरा विश्वतश्चक्षुरेकः ॥
सर्वज्ञः सर्वशक्तिः सरिगमपधनिब्रह्मवीणास्वरूप-
स्त्वं नाथो ह्यात्मविद्या सकलसुरमुनिध्येयरूपो गुरुस्त्वम् ॥ ६ ॥

त्रिकालातीतस्त्वं त्रिगुणरहितो ह्यत्रयवपु-
स्त्रिशक्तिर्मूलं त्वं वियदनिलतेजोजलभुवः ॥
महायोगी मौनी यमिह सततं ध्यायति हृदा
स आत्मा सर्वेषां सकलसुररूपस्त्वमसि वै ॥ ७ ॥

लम्बोदरः प्रकृतितः पुरुषात्परोऽयं
विघ्नान्तको गणपतिर्जगतोऽस्य हेतुः ॥
आविर्बभूव शिवनन्दनरूवतोऽसौ
सृष्ट्यादिकाल इह भक्तजनावनार्थम् ॥ ८ ॥

ॐ गं गणेशवरदं प्रणमामि नित्यं
लम्बोदरं गजमुखं घृतपाशहस्तम् ॥

भक्तानुकम्पितहृदं जगदीश्वरं तं
ध्यायन्ति चात्महृदये मुनियोगिनो यम् ॥ ९ ॥

विद्याकलागुणनिधिं सकलार्थदं स-
च्चित्सौख्यकन्दममृतं प्रभजामि पूर्णम् ॥
निर्विघ्नकारकममुं नु कलौ प्रसन्न-
मत्यल्पकालभजनात्स्वपदप्रदं तम् ॥ १० ॥

रक्तगन्धरक्तपुष्परक्तवस्त्रधारक-
मेकदन्तवक्रतुण्डरक्तवर्णशाङ्करम् ॥
सूक्ष्मनेत्रशूर्पकर्णकं हि मूषकध्वजं
श्रीगणेश ! बुद्धिदायकं मुदा नमाम्यहम् ॥ ११ ॥

एकदन्ताय विद्महे वक्रतुण्डाय धीमहि ॥
गणेशाय नमस्तुभ्यं तन्नो दन्तिः प्रचोदयात् ॥ १२ ॥
नमस्ते व्रातपतये नमो विघ्नविनाशिने ॥
नमः प्रमथपतये नमः शिवसुताय ते ॥ १३ ॥
नमस्ते ह्येकदन्ताय चिच्छ्रीवरदमूर्तये ॥
लम्बोदरगणेशाय शूर्पकर्णाय ते नमः ॥ १४ ॥

शान्तो दान्तस्तितिक्षुर्गुरुपदकमले पूर्णनिष्ठः सुशिष्यः
पूर्णात्मानं गणेशं सकलभयहरं पूर्णभक्त्या विजानन् ॥
ध्यात्वा स्तुत्वाऽथ नत्वा निरतिशयसुखं तत्प्रसादाल्लभेत्सः
प्रारब्धं नैव तस्य क्षणिकमपि तदा पूर्णकल्याणमूर्तेः ॥ १५ ॥

कल्याणसेवककृतं सुगणेशभक्त्या
स्तोत्रं चिदक्षरसतो गणनायकस्य ॥



पाठात्तथा सुमननाद्गणराट्सुभक्त्या
कल्याणमत्र सलभेच्चिरशान्तिसौख्यम् ॥ १६ ॥

इति श्रीसमर्थरामदास-कल्याणपदान्वित-
कल्याणसेवकप्रणीतरत्नपञ्चके
प्रथमं रत्नं गणेशस्तोत्रं
सम्पूर्णम् ।

---

## द्वितीय रत्नम् ।

## २ सीताऽष्टकम् ।

सीता सदा प्रकृतिरेव परात्मशक्ति-
र्वागीश्वरी सकलवेदमयी प्रपूर्णा ॥
श्रीरामचन्द्रचरणे सततं विलीना
मायामयी निखिलदेवमयी वरेण्या ॥ १ ॥

सत्याऽमृता संसृतिबीजरूपा
साकाररूपं सकलं दधाना ॥
श्रीरामसान्निध्यवशात्स्वतन्त्रा
ज्ञेया मनुष्येन्द्रसुरासुरैश्च ॥ २ ॥

महामाया सीता निखिलजगदुत्पादनकरी
महालक्ष्मीर्देवी सकलफलदात्री त्रिभुवने ॥
क्रियाशक्तिः साक्षादनवरतविद्यानिधिपरा
निमेषोन्मेषात्सा भुवनलयकर्त्री जनकजा ॥ ३ ॥

नित्यानन्दा परमसुखदा नित्यतृप्ता प्रसन्ना
पञ्चभ्रान्तिप्रणिरसनतश्चात्मबोधप्रदात्री ॥
विद्याविद्यासकलभवभीभ्रान्तिभेदप्रहन्त्री
सर्वोत्कृष्टा हृदयकमले जानकी मे सदाऽस्ति ॥ ४ ॥

भद्रा दुर्गा ज्ञानविज्ञानरूपा
शान्ता काली भुक्तिमुक्तिप्रदात्री ॥
नित्या पूर्णा विश्वमाताऽऽत्मविद्या
लब्धा सीता शारदा वेदमाता ॥ ५ ॥

तुरीयातीता मा परमवरदा श्रीश्च धनदा
विधात्री सावित्री सकलसुखदात्री ह्यभयदा ॥
सकामानां भीतिर्न तु भवभयं स्वात्मसुखिनां
सुसौख्यं चित्पूर्णं भजति मनुजो मातृकृपया ॥ ६ ॥

वेदान्तार्थस्वरूपा परमसमरसा व्यापिनी ज्ञप्तिरूपा
रुद्रादित्यादिरूपाऽखिलविधसुखदा मोक्षदा ज्ञानगङ्गा ॥
मुक्तालङ्कारयुक्ताऽभयवरदकरा सिद्धिदा रामपत्नी
पद्माक्षी पद्महस्ताऽमलतमवपुषी संततं शं तनोतु ॥ ७ ॥

सीता सिता प्रभवदा प्रणवात्मिकेयं
प्राणेश्वरी परतमा परमाऽन्नपूर्णा ॥
सूर्येन्दुशक्रशिवरामसुदेहधात्री
चिच्चेतनामतिकलास्वसुखैकदात्री ॥ ८ ॥

कल्याणसेवकहृदिस्थसरस्वती या
सीता प्रभा कमलजा भगवत्प्रिया मा ॥



व्यक्ता सुवाक्सकलकामदुहा च धेनुः
सर्वान्सदा विमलभक्तजनान्प्रपातु ॥ ९ ॥

इति श्रीसमर्थरामदास-कल्याणपदान्वित-
कल्याणसेवकप्रणीतरत्नपञ्चके
द्वितीयं रत्नं सीताऽष्टाकं
सम्पूर्णम्।

---

## तृतीयं रत्नम्।

## ३ श्रीकृष्णलीला।

गोवर्धनधर ! गोपीवल्लभ ! गोपाल ! गोप ! गोविन्द ! ॥
प्रसीद परमानन्द ! पावन ! परमात्मकृष्ण ! पापघ्न ! ॥ १ ॥
वृन्दावनसुरभूरुहतलासीनपार्थसारथिं कृष्णम् ॥
सुवेणुनादविनोदं विष्णुं वन्दे वनमालाकण्ठम् ॥ २ ॥

प्रणम्य कृष्णं ह्यतिशुद्धरूपं
साक्षात्प्रभुं राममजस्वरूपम् ॥
वदामि किञ्चित्स्वनुभूतमात्रं
श्रीकृष्णलीलाममनस्त्वसिद्ध्यै ॥ ३ ॥

कालिन्दीयमुनाजलेषु बहुषः श्रीकृष्णलीलाऽभव–
त्तच्चित्सौख्यसुसक्तवारिषु नरैः स्नात्वा मुदा प्रेमतः ॥
सन्ध्यादौ हरिचन्दनं ह्यतिशुभं श्रीकृष्णनामामृतै–
र्मिश्रीकृत्य सुधार्यतां सुविमलं मूढैरपि प्रोच्चकैः ॥ ४ ॥

यल्लिप्तं प्रतिनित्यमर्चनविधौ भक्तैः प्रभौ चन्दनं
गोपीभिः स्वकरैस्तदेव सलिलैः प्रक्षालितं प्रेमतः ॥
गोपीचन्दननामतस्तदभवच्चित्सौख्यसङ्घात्प्रभोः
पापघ्नं धरणीतले निजमुखे यो धारयेन्मुक्तिभाक् ॥ ५ ॥

ऊर्ध्वं पुण्ड्रं धारयेद्विष्णुभक्तः
संन्यासी वा ब्रह्मचारी गृहस्थः ॥
शङ्खं चक्रं सर्वचिह्नानि सम्यक्
तत्तत्स्थाने ध्यानयुक्तं सुभक्त्या ॥ ६ ॥

हृदयकमले ध्यात्वा कृष्णं हरिं प्रभुमच्युतं
नियतमनसा पूर्णात्मानं सदैव जगद्विभुम् ॥
हृदि शिरसि यो बाहौ कण्ठे नरोऽत्र सुधारये-
दिहपरसुखं कृष्णप्रीत्या निजामृतमाप्नुयात् ॥ ७ ॥

कमलनयनं मेघश्यामं तनौ समलङ्कृतं
द्विभुजममलं गोपीप्राणं सुरद्रुममश्रितम् ॥
रसति भजति ज्ञानानन्दो न्विहाचलभक्तितो
वनचरगवीमध्ये कृष्णं स मुक्तिमवाप्नुयात् ॥ ८ ॥

ईड्यः कृष्णः सुरमुनिजनैर्गोपगोपीसमेतो
यः कालिन्दीसलिललहरीसङ्गिवातेन सेव्यः ॥
एको नित्यो विविधरहितोऽद्वैतमात्रोऽपि लीलां
कुर्वाणोऽजोऽज्ञजनसुहितार्थाय देहं दधानः ॥ ९ ॥

कृष्णो हि ब्रह्मचारी सरसि कमलवच्छ्रेष्ठ एवावतारे
भूम्यां साक्षात्स्वरूपः प्रकटितविमलो लोककल्याणकारी



सर्वे गायन्ति कृष्णं त्रिगुणविरहितं गोपगोपीसमेतं
नानालीलां स्वमायां मुनिहृदयहरां दर्शयन्तं जनानाम् ॥ १० ॥

गर्भजन्ममृत्युरोगतापपापहारकः
शक्तियुक्तिभुक्तिभक्तिसर्वदायकः प्रभुः ॥
श्रीसुयुक्त–गोपबाल–पार्थसारथिर्हरि–
र्ब्रह्म नित्यशुद्धबुद्धमुक्तसत्सुखात्मकम् ॥ ११ ॥

क्रोधकामलोभमोहदम्भदर्पमत्सराऽऽ–
दुष्टदैत्यनाशतो भजेत्सुधीः सुभावतः ॥
शान्तिदान्तिवेदसारकृष्णभक्तिमेव तां
नित्यसिद्धमुक्तकृष्णवस्तु लभ्यते ततः ॥ १२ ॥

वक्रदन्तकेशिकंसपूतनादिराक्षस–
स्वस्थसर्वदोषरूपनाशतः स्वयं प्रभुः ॥
स्वस्वरूपसिद्धगुह्यशाश्वतं निजप्रभं
ब्रह्म कृष्ण एव राजते सदा मुदा हृदि ॥ १३ ॥

रामकृष्णवासुदेवनारसिंहवामनः
पद्मनाभमाधवत्रिविक्रमाच्युताव्ययः ॥
श्रीधरो जनार्दनो ह्यधोक्षजोऽद्वयो विभु–
र्ब्रह्म कृष्ण एव नारदादिमौनिसेवितः ॥ १४ ॥

नारायणो रघुवरो ज्वरैः सुसेव्यो
दामोदरो हरिहरोऽप्यनिरुद्धविष्णुः ॥
संकर्षणश्च मधुसूदनगोपिकाह–
त्पद्मासनस्थविमलो भगवान्वरेण्यः ॥ १५ ॥

विज्ञानरूपपरिपूर्णमनाद्यनन्तं
ब्रह्मात्मवस्तु सुखकेवलसुज्ञसेव्यम् ॥
गोविन्दवेणुधरगोपसुचित्तचोरं
कृष्णं परात्परतरं शरणं व्रजेत्ता ॥ १६ ॥

कृष्णो ब्रह्मैव साक्षाज्जनविजनसमः स्त्रीपुमान्भेदशून्यो
गोपीगोपादिलीलां भ्रमनिरतजनाः सर्वसत्यां वदन्ति ॥
नानास्त्रीबाललीला गुणरहितगुणे कल्पना का कथं स्या-
त्कृष्णज्ञानाय तस्माद्विषयसुरमणं त्यज्यतां शीघ्रमेव ॥ १७ ॥

कंसोऽहङ्कार आदौ नियमितमनसा कृष्णभक्त्या विलीनः
कर्तव्यः साधकेन प्रथितशमदमा उद्धवाक्रूररूपाः ॥
दुर्बोधं ब्रह्म कृष्णं विरहितविषमं सच्चिदानन्दपूर्णं
ज्ञात्वा ह्यत्यन्तयत्नैर्निरतिशयसुखं कृष्णभावं लभेत्सः ॥ १८ ॥

द्वेषश्चाणूरनामा ह्यतिनिजमहिमा मुष्टिको मत्सरो वै
गर्वः कंसश्च दर्पः सहजकुवलयापीड एवातिदुष्टः ॥
तन्नाशानन्तरं वै सुमधुरललनागोपिकाध्यातरूपः
श्रीकृष्णो ब्रह्म पूर्णं सततमुपनिषत्सारभूतं चकास्ति ॥ १९ ॥

सकामोऽकामो भवति स्मृत्वा कृष्णं च गोपिकाः ॥
जलं तीर्त्वा भवाम्बोधेः परं पारं गता यथा ॥ २० ॥

ब्रह्मानन्दो गोपिकाप्रीतिपात्रं
कृष्णः शान्तः शुद्धमायाविहीनः ॥
गोपो बालः शुद्धचित्तेन नित्यं
ध्यातव्याश्चित्साधकैः प्रेमभक्त्या ॥ २१ ॥



गीताप्रोक्तं पार्थरूपेण नित्यं
स्वस्मिञ्ज्ञात्वा स्वेन, मायाविमोहम् ॥
त्यक्त्वा,ऽद्वैतं केवलं ब्रह्म पूर्णं
कृष्णात्मानं भावयेद्वस्तुमात्रम् ॥ २२ ॥

विश्वेऽस्मिन्खलु चरजङ्गमे मुरारिः
सर्वात्मा सततविशुद्धमूर्तिरस्ति ॥
कल्याणं परमपवित्रकृष्णमत्र
ज्ञात्वा स्वं स्वनुभवतश्च मुक्तिभाक्सः ॥ २३ ॥

मनोवाचातीतं परमपुरुषं कृष्णममलं
स्वमात्रं स्वस्मिन्सद्ध्यनुभवपरं केवलमजम् ॥
कथं को निःशब्दं निरवयवनित्यं निरुपमं
कया सामग्र्या वा प्रवदति महद्ब्रह्म विबुधः ॥ २४ ॥

कल्याणसेवककृताऽमलकृष्णलीला
लीला हरेर्धृदयरागविकल्पलीलाम् ॥
शृण्वन्ति ये च कथयन्ति कथाममूं ते
भक्ता भवन्ति गृहबन्धनतो विमुक्ताः ॥ २५ ॥

इति श्रीसमर्थरामदास-कल्याणसेवकपदान्वित-
कल्याणसेवकप्रणीतरत्नपञ्चके
तृतीयं रत्नं श्रीकृष्णलीलानाम
सम्पूर्णम् ॥

---

## चतुर्थं रत्नम् ।

## ४ दशोपनिषत्सारः ।

**ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः ॥**
**ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा ॥ ॐ ॥**

**शान्तिः—**

शं नो मित्रो न इन्द्रो ह्यवतु पवन ! मां ब्रह्म साक्षाद्भवान्नु
प्रत्यक्षं नौ भुनक्तु ज्ञ ! सहगुणिगणैर्वीर्यकार्यं करिष्ये ॥
छन्दोभ्यो विश्वरूपोऽभवदहमधुना विश्रुवं भूरिसौख्यं
वृक्षस्याहं सुमूलं ह्यद इदमखिलं पूर्णपूर्णस्वरूपम् ॥ १ ॥
आप्यायन्त्विन्द्रियाणि, त्विह बलमखिलं स्वात्मधर्माश्च सन्तु,
श्रौतं मे मा प्रहासीर्मनसि वसतु तत्सत्यविज्ञानरूपम् ॥
भद्रं नः सर्वतः स्यान्नरसुरगणतः, स्वस्ति भूयाज्जनेभ्यो
ब्रह्मात्मानं प्रपद्ये नम इति गुरवे, प्रत्यगर्थोऽस्मि वस्तु ॥ २ ॥

**१ ईश—**

ईशावास्यं बहुविधजगत्सर्वमेकांशतो वै
तज्ज्ञानार्थं प्रथमत इह स्वस्य चित्तस्य शुद्धिः ॥
तत्कर्तव्या नियतमनसा ब्रह्मयाथात्मसिद्धिः
शोको मोहो भवति न तदा ह्येकमेवाद्वितीयम् ॥ ३ ॥

**२. केन—**

श्रोत्रश्रोत्रं यदिह जगति प्राणचक्ष्विन्द्रियाणां
व्यापारो हि प्रचलति निजो यस्य सामर्थ्ययोगात् ॥



अग्निर्वायुः सुरपतिरपि ज्ञातुमासन्न यद्वै
विज्ञानं तद्विमलमृतं ब्रह्म साक्षात्कुरुष्व ॥ ४ ॥

**३. कठ—**

श्रेयो धीरो वृणीते, विषयसुरमणं पण्डितंमन्यमानाः
कुर्वन्तु ज्ञानहीना, इहपरसुखिता नैव तेषां कदाऽपि ॥
लभ्यो वै नायमात्मा प्रवचनविधिना मेधया सुश्रुतेन,
प्रज्ञानेनाप्नुयात्तन्निरुपमममलं ब्रह्मकल्याणरूपम् ॥ ५ ॥

**४. प्रश्न—**

प्रजासृष्टिं ब्रह्माऽकुरुत सकलां प्राणविभवां
मनो वाक्प्राणस्य स्तवनमिह कुर्वन्ति च सुराः ॥
स कर्ता द्रष्टादिः परमपुरुषे तिष्ठति सदा
तमात्मानं ज्ञात्वाऽक्षरमजमखण्डं भवति ना ॥ ६ ॥

**५. मुण्डक—**

यस्मिन्विज्ञात एके भवति च सकलं ज्ञातमेवेह पूर्णं
यं साक्षाद्ब्रह्मविद्याऽक्षरमजमचलं प्रापयन्ती परा स्यात् ॥
तज्ज्ञानार्थं स गच्छेद्गुरुमिह शरणं श्रोत्रियं ब्रह्मनिष्ठं
ब्रह्मैवेदं विजानन् शमदमसहितो ब्रह्मभूतो भवेत्सः ॥ ७ ॥

**६. माण्डूक्य—**

त्रिकालातीतः सन्सकलसमयो यस्त्रिविधतः
स एवोङ्कारश्चिद्विमलपरमात्मा शिवतमः ॥
स आत्मा विज्ञेयस्त्रिपदरहितः शान्तिपरमो
ह्यदृष्टोऽग्राह्योऽजो हृदयकमलेऽन्तर्बहिरपि ॥ ८ ॥

७. तैत्तिरीय—

सत्यं ज्ञानं ह्यनन्तं शतशतगुणितं पूर्णमानन्दमेकं
यस्मात्प्राणो मनो वाक्सकलसुरगणो दूरमत्यन्तमास्ति ॥
सर्वे धावन्ति भीत्या रवियमपवनाः पञ्चकोशातिदूरं
ह्यप्राप्यं भेदबुध्याऽभयमचलमयं ब्रह्मवित्प्राप्नुयात्तत् ॥ ९ ॥

८. ऐतरेय—

सर्वं प्रज्ञानमेव क्रतुधृतिमतयः कामसंज्ञानमेधाः
सङ्कल्पोऽज्ञानजूती स्मृतिहृदयवशा नामधेयानि तस्य ॥
प्रज्ञानं ब्रह्मसाक्षात्सुरनरसहितः स्थावरो जङ्गमश्च
प्रज्ञाने सर्वलोकोऽमृतमिह स भजेज्ज्ञानविज्ञानपूर्णः ॥ १० ॥

९. छान्दोग्य—

सर्वं ब्रह्मैव नान्यध्दृदि बहिरखिलं श्लिष्यते नापि केन
प्राणः कं खं मनो वै जगदिदमखिलं भावयेद्ब्रह्म पूर्णम् ॥
मृत्पिण्डान्मृण्मयं तत्कलशमुखमिदं नामरूपं च मिथ्या
तस्माद्ब्रह्मैव साक्षात्त्वमसि विमलतत्सच्चिदानन्दभूमा ॥ ११ ॥

१०. बृहदारण्यक—

ओतःप्रोतोऽयमात्मा, सकलनरवरैः पूर्णवैराग्ययुक्तै-
र्बाल्यं मौनं च कृत्वाऽक्षरमजममनो ब्रह्म वेद्यं प्रयत्नैः ॥
नानाभानं विहाय प्रवचनमतिसंलापनं शास्त्रवेदान्
शान्तो दान्तस्तितिक्षुः परमसुखघनं ब्रह्म भूयात्स्वसम्राट् ॥ १२ ॥

* * *



वेदान्तार्थातिसारोपनिषदमृततद्ब्रह्मपीयूषपानं
कृत्वाऽहङ्कारशून्यो ममतवरहितः सच्चिदानन्दपूर्णः ॥
आचार्यं शङ्करं सद्गुरुमहमनमं नित्यकल्याणमासं
शान्तिः शान्तिः सुशान्तिर्भवभयगलितं ब्रह्मसाम्राज्यमाप्तम् ॥ १३ ॥

एतत्सारस्य पाठात्सततमुमननाध्यासतः पूर्णसाक्षा-
त्काराद्ब्रह्मैव भूयाच्छमदमसहितः शुद्धसत्त्वो विरागी ॥
कष्टं नैवात्र किञ्चिन्न्वखिलमुपनिषद्भाष्यजालं च मास्तु
कल्याणःसेवकोऽयं त्रिगुणविरहितं केवलं ब्रह्म वस्तु ॥ १४ ॥

इति श्रीसमर्थरामदास-कल्याणपदान्वित-
कल्याणसेवकप्रणीतरत्नपञ्चके
चतुर्थरत्नं दशोपनिषत्सारो नाम
सम्पूर्णम् ।

---

पञ्चमं रत्नम्

## ५. स्वात्मपूजा

सर्वे जानन्ति पूजां विविधविधिकलां ध्यानमावाहनादीन्
पाद्यार्घ्यस्नानगन्धादिकमपि च ततो धूपदीपादिकं च ॥
स्तुत्वा, त्यक्त्वैव देवं सकलनिगमजं, धातुपाषाणमूर्तिं
संसारे सञ्चरन्ति भ्रमनिरतजना नैव जानन्ति हृत्स्थम् ॥ १ ॥

ब्रह्मेशानपुरन्दरप्रभृतिभिर्देवैर्जनैर्वन्दितं
स्वस्मिन्स्वेन सदाऽनुभूतमचलं तद्वाङ्मनोऽगोचरम् ॥
ध्यातृध्येयविवर्जितं शुभतमं ध्यानं स्वमात्रं परं
पूर्णानन्दमखण्डमच्युतमहं ब्रह्मैव सच्चिद्घनम् ॥ २ ॥

पूर्णात्पूर्णतरं परात्परतरं प्रत्यक्स्वरूपं स्वयं
ब्रह्मैवास्मि सदेकचिद्घनसुखं शान्तं ह्यजं केवलम् ॥
व्याप्तं स्वेन चराचरं त्रिभुवनं किं स्वस्य चावाहनं
कर्तुं कोऽपि कदा कथञ्चिदपि नो कुत्रापि शक्नोति वै ॥३॥

नाना नास्ति पदार्थभानमपि तत्सच्चित्सुखं केवलं
मायाकारणकार्यशून्यममलं कालत्रयाबाधितम् ॥
देहातीतमचञ्चलं पदमहं दिग्देशभेदो न मे
तस्मादत्र न मह्यमासनविधिर्ब्रह्मैव पूर्णं जगत् ॥ ४ ॥

पादौ नास्ति शरीरशून्यमचलं कल्याणवस्तु स्वयं
चापः सन्ति न भूतरूपमखिलं किञ्चिन्मयि ब्रह्मणि ॥
पाद्यं कुत्र समर्प्यतां न हि जलं सङ्कल्पको नास्ति वै
नित्याप्तं परमं पदं निरुपमं पूर्णं परं धाम मे ॥ ५ ॥

अन्तर्बाह्यविशेषभेदरहितं स्वस्मिन्स्वमात्रं त्वहं
हस्तो नैव च देहभावरहितत्त्वाद्ब्रह्म यस्मात्स्वयम् ॥
अर्घ्यं केन कथं च वारिरहितं सङ्कल्पनीयं मनोऽ-
भावाद्ब्रह्म सदद्वितीयपरमानन्दैकसम्राडहम् ॥ ६ ॥

गङ्गा नैव सरस्वती च यमुना कृष्णा न गोदावरी
कावेरी च घटप्रभा न सरयू तुङ्गा तथा नर्मदा ॥



सिन्धुर्नैव समुद्र एव न मयि ब्रह्मार्णवे केवले
पूर्णानन्दमये स्वरूपविमले स्नानस्य कोऽयं विधिः ! ॥ ७ ॥

ब्रह्मैकावरणस्य नाम्बरमहो ! नामाम्बरस्यापि मे
सूत्रं, केवलमेव वस्तु ततमाकाशे पदार्थादिके ॥
गन्धो मयिकभेदगन्धरहितं तद्वासनावर्जितं
सच्चिन्मात्रमनन्तमव्ययपदं ब्रह्मैव भूमा स्वयम् ॥ ८ ॥

ब्रह्मात्मैक्यरविप्रकाशकिरणैर्हृत्पद्ममुल्लासितं
स्वात्मानन्दसुगन्धलक्ष्म्यनुभवाद्दुर्द्वैतगन्धोगतः ॥
नित्यं शुद्धमजं ह्युपाधिरहितं निर्वाणमेकं स्वयं,
मय्यात्मन्यचले च केवलमजे पुष्पस्य का कल्पना ! ॥ ९ ॥

काश्मीरोद्भवगन्धवस्तुबहुलं श्रीचन्दनं चागरुं
मिश्रीकृत्य सुगन्धिधूपममलं कार्पासदीपं वृथा ॥
मायामोहमनोमलादिरहिते चाद्वैतसूर्योदये
धूपं दीपमसङ्गवस्तुनि शुभात्मन्येव तस्मात्कथम् ! ॥ १० ॥

भक्ष्यं भोज्यमनेकमिश्रितपयो लेह्यं च देवाय मे
नैवेद्यं सुनिवेदयन्ति नयने धृत्वाऽथवानासिकाम् ॥
त्रैलोक्यं सकलं मया सुगिलितं ब्रह्मात्मना संस्थितः
सच्चिध्येकरसोऽमृतोऽहममलो नैवेद्यमस्मान्नु किम् ॥११॥

ताम्बूलस्य तु चर्वणं सकलधीर्ब्रह्माहमस्मीति वै
पूर्णा भूरपि काञ्चनेन किमु सा ब्रह्मात्मने दक्षिणा ! ॥
निर्वाणं परिपूर्णमेकमचलं किं तत्फलं दीयते
ह्यानन्दामृतवारिधौ किमपि नो 'ब्रह्मास्मि' वृत्तिर्न हि ॥१२॥

नैश्चल्ये निरुपाधिके निरुपमे निर्नाम्नि नित्ये निजे
स्वानन्दे किमपि प्रदक्षिणविधिर्नैवास्ति सत्यात्मनि ॥
मौनं स्तोत्रमखण्डपूर्णसहजावस्थैव भक्तिः शुभा
कल्याणी मनसो हतिर्ननु नतिर्मे स्वात्मपूजाकृते ॥ १३ ॥

किं ग्राह्यं च विसर्जनं किमपि न ह्यद्वैतमात्रे परे
प्रज्ञाने परमे पुरातनपदे साक्षान्मयि स्वात्मनि ॥
प्रत्यक्पूर्णरसेऽपरोक्षविमले विज्ञानविश्वाधिके
शान्तानन्दसदोज्वलामृतघने कल्याणसत्सेवके ॥ १४ ॥

इत्थं यः स्वात्मपूजां निरवधिविमलां सौख्यदात्रीं करोति
द्वैताद्भीतिर्न किञ्चिज्जननमरणजा शोकमोहौ न तस्य ॥
कालस्थानाद्यपेक्षा किमपि न शुचिता स्वात्मशुद्धिस्तु मुख्या
कल्याणार्थं स्वपूजा विमलनरवरैरेव कार्या हृदब्जे ॥ १५ ॥

इति श्रीसमर्थरामदास-कल्याणपदान्वित-
कल्याणसेवकप्रणीतरत्नपञ्चके
स्वात्मपूजानाम पञ्चमं रत्नं
सम्पूर्णम् ।

इति रत्नपञ्चकम् ।

॥ ॐ तत्सत् ॥

---

॥ श्रीरामसमर्थः ॥

# दिनचर्याऽष्टकम् ।

( स्तोत्रनक्षत्रमालान्तर्गतम् । )

शुद्धिश्चित्तस्य चोषो मनुजजनिवशाज्जाग्रती ज्ञानशक्ति-
र्ह्यात्मानात्माऽऽविवेको दिवसकृदुदयोऽरागितैव प्रकाशः ॥
त्यक्त्वा सम्पत्सुतोर्वीमुखविषयगणं चैव विष्ठां तदानीं
पश्चात्स्नानं च कार्यं चिदहमितिशुभज्ञानगङ्गाजलेन ॥ १ ॥

सच्चित्सौख्यं त्रिपुण्ड्रं ह्यविरतमननं धारणं भस्मनो वै
सन्ध्याकर्मैव साक्षाद्विरहितमनसा दर्शनं तस्य यत्तु ॥
वृत्त्योर्मध्ये सुपूर्णं विमलमविचलं ब्रह्म कल्याणरूपं
स्वानन्दं स्वेनमात्रं सकलहृदिगतं वाङ्मनोतीतमेकम् ॥ २ ॥

आत्मारामस्य पूजां स्वहृदयकमले प्राज्ञ ! निर्वर्तनीया
पाद्यार्घ्यस्नानमुख्या विविधविधिकला मास्तु सङ्कल्प एव ॥
नैवास्ति ब्रह्मणोऽन्यत्त्रिभुवनजठरे सत्पदार्थो द्वितीयो
ह्येतद्वृत्तिप्रवाहो निरवधिरचलः स्वात्मलिङ्गस्य पूजा ॥ ३ ॥

कर्तव्यो ब्रह्मयज्ञो ह्यविरतमनसा ब्रह्मयाथात्मरूप-
स्तद्वच्छुद्धात्मना वै त्रिविधमिदमहो ! दैवमार्षं च पैत्र्यम् ॥
विज्ञानात्माम्बुजालैस्तिलयवसहितैस्तर्पणं चिन्तनं त-
त्त्यक्त्वा भानं द्वितीयं, भवभयरहितं ब्रह्मणः स्वात्मनो वै ॥ ४ ॥

कृत्वाऽऽदौ वैश्वदेवं नियमितमनसा ज्ञानवह्नौ सुमाया-
भानं ह्यन्नं च हुत्वा तदुपरि विविधं वृत्तिरूपं सुपाकम् ॥
आत्मारामं समर्प्य ह्यनुदिवसनिशं भोजनं कार्यमेव
चातुर्यं भोजनादौ यदि न विलसते तर्हि रोगश्च भूयात् ॥ ५ ॥

पेयं ज्ञानामृतं सत्सततमविचलं भोज्यमत्यन्तशुद्धं
लेह्यं ब्रह्मैव वस्तु ह्यघटितघटनाद्वैतमायाविशेषम् ॥
चोष्यं विश्वात्मकं यत्त्वाविरतमननं भोजनान्ते च तक्रं
सुज्ञो यो वै पिबेत्तद्भवभयरहितो मुक्तिभागेव स स्यात् ॥ ६ ॥
भुक्त्वा ज्ञानान्नमादौ विमलनरवरैर्ब्रह्मचर्चा सुकार्या
ह्यन्योन्यं स्वानुभूतं निरतिशयसुखं बोधयद्भिर्विशुद्धम् ॥
कर्तव्यं स्वेन नित्यं विगलितविषमं स्वात्मनो ध्यानमुच्चै-
'र्ध्याता ध्येयं न किञ्चित्सकलविरहितं ब्रह्म पूर्णं स्वमात्रम्' ॥७॥
शय्या ब्रह्मैव साक्षान्मृदुतमविमला पूर्णसौख्यैकदात्री
कान्ता मुक्तिर्यया वा अविरतरमणात्काम एवातिशान्तः ॥
निद्रा ब्रह्मैक्यरूपा ह्यविचलपरमाऽऽनन्दपूर्णा समाधिः
कल्याणं सेवकस्योरुतरभयहरं स्वात्मसाम्राज्यपूर्णम् ॥ ८ ॥
वाचा चित्तेन केनाप्यखिलमतिकलाशक्तियुक्तेन नो वै
शक्येत ब्रह्म लब्धुं निरतिशयसुखं वृत्तिशून्यं सुपूर्णम् ॥
स्वात्मारामं स्वमात्रं सततसुविमलं स्वेन सौख्यानुभाव्यं
स्वस्मिन्सच्चित्सुखाब्धिं विगलितविषमं केवलं वस्तुतन्त्रम् ॥ ९ ॥
इत्थं यस्यास्ति चर्या प्रतिदिवसमपि ध्यानमुच्चैश्च कुर्व-
न्नात्मानात्माऽऽविवेकी शमदमसुमुखैः साधनैश्चाप्युपेतः ॥
शुद्धात्मा ब्रह्म सूक्ष्मं भवभयरहितं ज्ञानिहृत्पद्मसंस्थं
ज्ञात्वा त्वत्रैव पूर्णं निरतिशयसुखी मुक्तिभाङ्ना स भूयात् ॥ १० ॥
इति श्रीसमर्थरामदास-कल्याणपदान्वितकल्याणसेवकविरचितं
दिनचर्याऽष्टकं सम्पूर्णम्।

---

॥ ॐ ॥

स्वानन्दसम्राट् श्रीमत्

# कल्याणसेवकमहाराजप्रणीत

# ग्रन्थाः।

(१) गीतामाला। (गीतागौरवसहिता।)
(२) स्तोत्रनक्षत्रमाला। (२८ स्तोत्राणि।)
(३) स्वानन्दसाम्राज्यम्। (सहस्रश्लोकाः)
(४) रत्नपञ्चकम्। (१ गणेशस्तोत्रम्, २ सीताष्टकम्, ३ श्रीकृष्णलीला, ४ दशोपनिषत्सारः, ५ स्वात्मपूजा।)
(५) नवरत्नहारः। (१ वैराग्यम्, २ स्वात्मसुखम्, ३ आत्मसाधनम्, ४ ब्रह्मभावना, ५ रामचन्द्रपदम्, ६ रामरत्नम्, ७ स्वानन्दानुभवः, ८ ब्राह्मणः, ९ स्वानन्दसम्राट्।)
(६) स्वात्मारामसहस्रनामावलिः।
(७) गीतानि। (रागतालयुक्तगेयपद्यानि।)

— मराठी —

(८) सार्थ आत्माराम (प्रकाशित)
(९) न्यासविवेक
(१०) ईशविलास
(११) अभंग-पद्यादि

॥ ॐ ॥

स्वानन्दसम्राट् श्रीमत्
कल्याणसेवकमहाराजप्रणीता

# गीतामाला

नागरी और तेलगू लिपिमें
छपी गयी है।

★

और

# स्वानन्दसाम्राज्यम् ।

नागरीमें छपा रहा है।

★

जलदी जनताजनार्दनके
करकमलमें आ जायगा।



चन्दा-कान्तय्या
वरंगल
WARANGAL